तये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥ ३२ ॥

वाजाय । वाजादयोऽन्नाधीशाः ॥ ३२ ॥

वाजाय । वाजादयोऽन्नाधीशाः ॥ ३२ ॥

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहापानो यज्ञेन कल्पताꣳ स्वाहा व्यानो यज्ञेन कल्पताꣳ स्वाहोदानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन कल्पताꣳ स्वाहा श्रोत्रं यज्ञेन कल्पताꣳ स्वाहा वाग्यज्ञेन कल्पताꣳ स्वाहा मनो यज्ञेन कल्पताꣳ स्वाहात्मा यज्ञेन कल्यताꣳ स्वाहा ब्रह्मा यज्ञेन कल्पताꣳ स्वाहा ज्योतिर्यज्ञेन कल्पताꣳ स्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा पृष्ठं यज्ञेन कल्पताꣳ स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा ॥ ३३ ॥

आयुः यज्ञेनाश्वमेधेनायुः कल्पताम् । एवमग्रेऽपि प्रार्थनामन्त्राः ॥ ३३ ॥

आयुः । यज्ञेनाश्वमेधेनायुः कल्पताम् । एवमग्रेऽपि प्रार्थनामन्त्राः ॥ ३७ ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहैकशताय स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥ ३४ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
द्वाविंशोऽध्यायः ॥ २२ ॥

व्युष्ट्या इति व्युष्ट्यम् स्वर्गायेत्युदिति । प्राणाय स्वाहेत्यारभ्य द्वादशभिः कण्डिकासंमितै रनुवाकैर्देवता उक्ताः आज्यादिहविर्भिः । एते सर्वे एव यागाः महतो यज्ञस्य लोककालाग्न्यादिवपुषो ऽवयविनोऽवयवभूताः । यथा देवदत्तस्यावयविनोऽवयवभूताः । शिरः पाण्यादयः । सोऽयमश्वमेधः प्रजापतेरवयविनोऽवयवभूतः प्रजापतेश्चात्मनः । सोऽयमात्मा । शाखाप्रशाखागतः स्तूयते हूयते च ज्ञानकर्मसमुच्चयकारिभिर्यजमानैः । एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति प्रकारदर्शनम् त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहेति एकशतात् ॥ ३४ ॥

इति उव्वटकृतौ मन्त्रभाष्ये द्वाविंशोऽध्यायः ॥ २२ ॥

---

एकस्मै । संख्याधीशाः । व्युष्टी रात्रिः स्वर्गो दिनम् । रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत् प्रीणातीति श्रुतेः (१३, २, १, ६) ॥ प्राणादयोऽश्वमेधस्यावयविनोऽवयवाः स च प्रजापतेरवयः स आत्मन इत्यात्मैव स्तूयते रज्यते इति भावः । सर्वमिदं यदयमात्मेति श्रुतेः ॥ ३४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
अश्वमेधाहुतिर्नाम द्वाविंशोऽध्याय ईरितः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥

हिरण्यगर्भः सम् । महिम्नः ( २ ) पुरोरुक् । व्याख्यातम् ॥ १ ॥

द्वाविंशे होममन्त्रास्त्रयोविंशेऽध्याये शिष्टं कर्मोच्यते ॥ का० ( २०, ५, १—२ ) प्रातरुक्थ्यो महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति । प्रातर्द्वितीयेऽहनि उक्थ्यसंस्थमहर्भवति तत्र महिमसंज्ञौ द्वौ ग्रहौ गृह्णाति आगन्तुत्वादाग्रयणोक्थ्ययोर्मध्ये तौ गृह्णाति अन्तराग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणामिति वचनात् द्वयोर्मध्ये पूर्वं महिमानं सौवर्णेनोलूखलेन गृह्णाति । व्याख्याता (१३,४,) ॥१॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि । एष ते योनिः सूर्यस्ते महिमा । यस्तेऽहन् संवत्सरे महिमा सम्बभूव यस्ते वायावन्तरिक्षे महिमा सम्बभूव यस्ते दिवि सूर्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥ २ ॥

उपयामगृहीतोऽसि । प्रजापतये त्वा जुष्टमभिरुचितं गृह्णामि । सादयति । एष ते तव योनिः स्थानं सूर्यस्तव महिमा महाभाग्यं शक्तिः दीपस्येव प्रभा । जुहोति । यस्तेऽहन् । यस्तव अहनि संवत्सरे च महिमा सम्बभूव सम्भूत उत्पन्नः । अहनि निमित्तभूते सर्वाण्येव भूतानि सम्पद्यन्ते । निमित्तसप्तम्यश्चैताः । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरमिति यथा । यः ते वायौ अन्तरिक्षे च महिमा सम्बभूव । यस्ते दिवि च सूर्ये म-

हिमा सम्बभूव । तस्मै ते तव महिम्ने प्रजापतये च स्वाहा देवेभ्यश्च ॥ २ ॥

उपयाम० प्रजापतये जुष्टं रुचितं त्वां हे ग्रहाहं गृह्णामि ॥ का० ( ९, ५, २५ ) एष ते योनिरिति ग्रहसादनम् । एष ते योनिः स्थानं ते तव महिमा शक्तिः सूर्यः दीपस्येव प्रभा ॥ का० ( २०, ७, १६ ) यस्तेऽहन्निति जुहोति । पूर्वमहिमानं ग्रहं जुहोति वषट्कृते सर्वहुतम् ॥ देवदेवत्यं यजुः द्व्यधिका शक्वरी । हे महिमन् ! यः ते तव माहिमा अहन् अह्नि दिवसे संवत्सरे च निमित्ते सम्बभूव उत्पन्नः वायौ अन्तरिक्षे च यः तव महिमा सम्बभूव दिवि सूर्ये च यस्ते महिमा सम्बभूव ते तव तस्मै महिम्ने प्रजापतये देवेभ्यश्च स्वाहा सुहुतमस्तु ॥ २ ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥

द्वितीयं गृह्णाति तस्य पुरोरुक्यः प्राणतः कायी प्राजापत्या यः कः प्रजापतिः प्राणतः प्राणनं कुर्वतः भूतग्रामस्य निमिषतः निमेषण कुर्वतः क्रियावत इत्यर्थान्तरम् महित्वास्वकीयेन महाभाग्येन । एक इत् । इच्छब्द एवार्थे । एक एव समस्तस्य जगतो राजा बभूव संवृतः । यश्च ईशे ईष्टे अस्य द्विपदः प्राणिजातस्य यश्च चतुष्पदः ईष्टे प्राणिजातस्य । तस्मै कस्मै देवाय प्रजापतये हविषा विधेम । विदधातिर्दानकर्मा हविरिति विभक्तिव्यत्ययो द्वितीयान्तः । हविर्दद्मः ॥ ३ ॥

का० ( २०, ५; २ ) द्वितीयꣳ राजतेन यः प्राणत इति । द्वितीयं महिमानं ग्रहं राजतेनोलूखलेन गृह्णाति ॥ हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् । तस्मै कस्मै प्रजापतये देवाय वयं हविर्विधेम हविर्दद्मः विदधातिर्दानार्थः तृतीया द्वितीयार्थे । तस्मै कस्मै यः प्रजापतिः प्राणतः प्राणनं जीवनं कुर्वतो निमेषतो निमेषणं कुर्वतः उपलक्षणमे-

तत् दृगादीन्द्रियव्यापारं कुर्वतः सचेतनस्य जगतः विश्वस्य एक एव राजा बभूव केन महित्वा महेर्महिम्नो भावो महित्वं तेन महित्वेन विभक्तेः पूर्वसवर्णः महाभाग्येनेत्यर्थः । यश्चास्य द्विपदः द्वौ पादौ यस्य स द्विपात् तस्य पादः पदिति पदादेशः द्विपादस्य मनुष्यपक्ष्यादेः चतुष्पदः हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्य्यं करोति लोपस्त आत्मनेपदेष्विति तकारलोपे ईशे इति रूपम् अधीगर्थदयेशां कर्मणीति कर्मणि षष्ठी ॥ ३ ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि । एष ते योनिश्चन्द्रमास्ते महिमा । यस्ते रात्रौ संवत्सरे महिमा सम्बभूव यस्ते पृथिव्यामग्नौ महिमा सम्बभूव यस्ते नक्षत्रेषु चन्द्रमसि महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥ ४ ॥

उपयामगृहीतोऽसि प्रजापये त्वां जुष्टं गृह्णामि । सादयति । एष ते योनिः चन्द्रमास्ते महिमा । जुहोति यस्ते रात्रौ संवत्सरे पृथिव्यामग्नौ च नक्षत्रेषु चन्द्रमसि च महिमा संबभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥ ४ ॥

उपयामपात्रेण गृहीतोऽसि प्रजापतये जुष्टं त्वां गृह्णामि ॥ सादयति । एष ते । चन्द्रमास्ते तव महिमा दीप्तिः ॥ का० ( २०, ७, २६ ) वपान्ते द्वितीयेन पूर्ववद् यस्ते रात्राविति जुहोति । वपायागान्ते द्वितीयेन महिम्ना पूर्ववदिति सर्वहुतं महिमानं जुहोति ॥ अग्निः हे महिमन् ! रात्रौ संवत्सरे च यस्ते तव महिमा सम्बभूव पृथिव्यामग्नौ च यस्ते महिमा सम्बभूव नक्षत्रेषु चन्द्रमसि च यस्तव महिमा सम्बभूव सर्वव्यापकस्तव यो महिमा तस्मै महिम्ने प्रजापतये देवेभ्यश्च स्वाहा सुहुतमस्तु ॥ ४ ॥

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ ५ ॥

अश्वं युनक्ति । युञ्जन्ति ब्रध्नम् । अश्वोऽत्रादित्यवत्स्तूयते उत्तरोऽर्द्धर्चः प्रथमं व्याख्यायते । यस्य भासा । रोचन्ते देदीप्यन्ते रोचनाः रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि । दिवि द्युलोके । तं युञ्जन्ति रथे बध्नन्ति । कथंभूतम् ब्रध्नम् परिवृढम् आदित्यम् अरुषमरोषणम् । चरन्तं गच्छन्तं वैदिककर्मसिध्यर्थम् । के युञ्जन्ति परितस्थुषः सर्वतस्थिता ऋग्यजमानाः॥५॥

का० ( २०, ५, ११ ) युनक्त्येनं युञ्जन्ति ब्रध्नमिति । अश्वं रथे युनक्ति ॥ मधुच्छन्दोदृष्टा आदित्यदेवत्या गायत्री । तस्थुषः विभक्तेर्व्यत्ययः तस्थिवांसः कर्मार्थे स्थिता ऋत्विजः ब्रध्नमादित्यं युञ्जन्ति रथे योजयन्ति । अश्व आदित्यत्वेन स्तूयते असौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवास्या आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै इति श्रुतेः ( १३, २, ६, १ ) । किम्भूतं ब्रध्नम् अरुषं रोषति क्रुध्यति रुषः इगुपधेति कः न रुषः अरुषः तं क्रोधरहितम् परिचरन्तं वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम् । यस्य ब्रध्नस्य रोचना विभक्तिलोपः दीप्तयो दिवि आकाशे रोचन्ते प्रकाशन्ते यद्वा रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि ब्रध्नस्य भासा रोचन्ते तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलका इति ज्योतिःशास्त्रोक्तेः ॥ ५ ॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ ६ ॥

इतराश्वं युनक्ति । युञ्जन्त्यस्य । गायत्री । युञ्जन्ति रथे- अस्याश्वमेधिकस्याश्वस्य काम्याकाम्यौ कामसम्पादिनौ नह्येको रथं वोढुं शक्तः । हरी हरितवर्णावश्वौ हरिणौ वा वेगवन्तौ । विपक्षसा । विविधाः पक्षसः पक्षाः ययोस्तौ विपक्षसौ । विविधपक्षावस्थितौ । यद्वा विरिति शकुनिनाम । वेतेर्गतिकर्मणः । वेः शकुनेरिव पक्षौ ययोस्तौ शोणा । शोणौ शोणशब्दोऽत्रवर्णवचनः । रक्तो वर्णो धूम्रभासः शोण इत्युच्यते । धृष्णू प्रसहनौ नृवाहसौ । नृणाम्मनुष्याणां वोढारौ ॥ ६ ॥

का० ( २०, ५, ११ ) इतरांश्च युञ्जन्त्यस्येति । इतरान् त्रीनश्वान् रथे युनक्ति । गायत्री अश्वस्तुतिः । ऋत्विजो हरी अश्वौ रथे युञ्जन्ति । कीदृशौ अस्याश्वमेधिकाश्वस्य काम्या काम्यौ काम्येते तौ काम्यौ कामसम्पादिनौ न त्वेको रथं वोढुं शक्त इति तौ काम्यौ विपक्षसापक्षपरिग्रहे असुन्प्रत्ययः पक्षयन्ति शरीरं गृह्णन्ति पक्षसः पक्षाः विविधाः पक्षसः पक्षाः ययोस्तौ विपक्षसौ यद्वा विरिति शकुनिनाम वेतेर्गतिकर्मण इति यास्कः ( निरु० २, ६ ) वेः पक्षिण इव पक्षसो ययोस्तौ । शोणा शोणौ रक्तौ धृष्णू प्रगल्भौ ञि धृषा प्रागल्भ्ये कुप्रत्ययः । नृवाहसा नॄन् वहतस्तौ वहेरसुन्प्रत्ययः सर्वत्र विभक्तेराकारः नृणां वोढारौ ॥ ६ ॥

**यद्वातो॑ अपो अग॑नीगन् प्रि॒यामिन्द्र॑स्य त॒न्व॑म् । ए॒तꣳ स्तो॑तरने॒न प॒था पुन॑र॒श्वमाव॑र्तयासि नः ॥ ७ ॥**

अपो यात्वावगाढेषु वाचयाति । यद्वातः । बृहती अश्वदेवत्या । यत् यस्मात् वातः । वातवेगोऽश्वः अपः प्रति अगनीगन् अत्यर्थं गतः । प्रियाश्च इन्द्रस्य तन्वं शरीरम् अगनीगन् अतो ब्रवीमि । एतमश्वम् हे स्तोतः अध्वर्यो अनेन पथा येन गतः । पुनः अश्वम् आवर्तयासि आवर्तय आनय नोऽस्माकम् ॥ ७ ॥

का० ( २०, ५, १, १४ ) अपो यात्वावगाढेषु वाचयति यद्वात इति । चतुर्भिरश्वैर्युक्तं रथमध्वर्युयजमानावारुह्य तडागादिजलं गत्वा जलं प्रविष्टेष्वश्वेषु यजमानं वाचयति । बृहती अश्वस्तुतिः । सिंहो माणवक इति वत् वातः वातसमानवेगोऽश्वः यत् यस्मात् अपो जलानि अगनीगन् इन्द्रस्य प्रियं तन्वं शरीरं चागनीगन् अत्यर्थं गतः दाधर्त्तिदर्धर्त्तीत्यादिना यङ्लुगन्तो निपातः अतो हे स्तोतः अध्वर्यो ! एतं नोऽस्माकमश्वमनेन पथा मार्गेण येन गतस्तेन पुनरावर्त्तयासि आवर्त्तय आनय लेटोऽडाटौ पुरुषव्यत्ययः ॥ ७ ॥

**वस॑वस्त्वाञ्जन्तु गाय॒त्रेण॒ छन्द॑सा । रु॒द्रास्त्वा॑ञ्जन्तु त्रैष्टु॑भेन॒ छन्द॑सा । आ॒दि॒त्यास्त्वा॑ञ्जन्तु जाग॑तेन॒**

छन्दसा । भूर्भुवः स्वर्लाजी३ञ्छाची३न्यव्ये गव्यं एत- दन्नमत्त देवा एतदन्नमद्धि प्रजापते ॥ ८ ॥

आगतमश्वम्महिषी वावाता परिवृक्ता आज्येनाभ्यञ्जयन्ति वसवस्त्वेति प्रतिमन्त्रम् । वसवस्त्वाञ्जन्तु । निगदव्याख्यातम् । सौवर्णान् मणीनेकशतमश्वकेसरपुच्छेषु प्रवयन्ति पत्न्यः । भूर्भुवः स्वः । व्याख्यातम् । अश्वाय रात्रिहुतशेषं प्रयच्छति । लाजीन् शाचीन् । योऽयं लाजानां समूहो लाजीनित्युक्तः योऽयं सक्तूनां समूहः शाचीनित्युक्तः । सक्तवो हि अतितरां शच्या कर्मणा निस्पद्यन्त इति शाचीनित्युक्ताः । यश्चायं यव्ये यवमयः समूह उक्तो धानाः यश्चायं गोर्विकारसमूह उक्तो गव्य इति । एतदन्नम् अत्त भक्षयत हे देवाः । एतदन्नमद्धि भक्षय हे प्रजापते । येभ्योऽश्वः । प्रोक्षितः तद्देवतत्वादेतद्देवत्योऽश्व इति ॥ ८ ॥

का० ( २, ५, १५ ) आयाय विमुक्तमश्वं महिषी वावाता परिवृक्ताज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिमन्त्रम् । आयाय जलप्रदेशाद्देवयजनमागत्य रथाद्विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्न्यो यथाक्रममश्वस्य पूर्वादिकायानभ्यञ्जन्ति घृतेन महिषी पूर्वकायं वसव इति वावाता देहमध्यं रुद्रा इति परिवृक्ता पश्चाद्भागमादित्या इति मन्त्रेणेति सूत्रार्थः । त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि । हे अश्व ! वसवोऽष्टौ देवा गायत्रेण छन्दसा त्वा त्वामञ्जन्तु स्निग्धं कुर्वन्तु । रुद्रा एकादश त्रैष्टुभेन छन्दसा त्वामञ्जन्तु । आदित्या द्वादश जागतेन छन्दसा त्वामञ्जन्तु । का० ( २०, ५, १६ ) अभ्रंश्यमानान्मणीन् सौवर्णानेकशतमेकशतं केसरापुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिमहाव्याहृतिः । महिष्याद्यास्तिस्रः पत्न्यः एकाधिकं शतं सुवर्णमयमणीन् यथा न पतन्ति तथा केसरयोः शिरःस्कन्धस्थयोः पुच्छे चाबध्नन्ति महिष्यश्वशिरोरोमसु भूरिति एकशतं मणीन् प्रवयति वावाता ग्रीवारोमसु भुव इति

परिवृक्ता पुच्छरोमसु स्वरिति वयतीति सूत्रार्थः । भूर्भुवः स्वः व्याख्याताः । का० ( २०, ५, १८ ) अश्वाय रात्रिहुतशेषं प्रयच्छति लाजीञ्छाचीनिति । सक्तुधानालाजारूपं रात्रिहुतशेषमश्वाय ददाति भक्ष्याय । अश्वो नास्ति चेत् जले प्रक्षेपः । लाजीन् अश्वदेवत्यं यजुः । लाजानां समूहो लाजीनित्युक्तः सक्तूनां समूहः शाचीन् यश्चायं यव्ये यव्यः यवसमूहः गव्ये गव्यः गोर्विकारसमूहो दध्यादिः । हे देवाः ! एतदन्नमत्त भक्षयत हे प्रजापते ! एतदन्नमद्धि भक्षय येभ्योऽश्वः प्रोक्षितस्तद्रूपोऽश्वः सम्बोध्यते ॥ ८ ॥

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किᳬं स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥ ९ ॥

ब्रह्मा पृच्छति होतारं यूयमभितः । कःस्वित् । चतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नरूपाः । कः पुनरेकाकी असहायः चरति गच्छति । क उ स्वित् । को नु विनष्टः सन् जायते पुनः उकारः पादपूरणः । किं पुनः हिमस्य शीतस्य भेषजम् । किञ्च आवपनं महत् उप्यते निक्षिप्यतेऽस्मिन्नित्यावपनम् ॥ ९ ॥

का० ( २०, ५, २० ) ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति । यूपस्य दक्षिणत उदङ्मुखो ब्रह्मा यूपोत्तरतो दक्षिणामुखं होतारं पृच्छति । ब्रह्मोद्ये कर्मणि होतुर्ब्रह्मणश्च प्रश्नप्रतिप्रश्नभूताश्चतस्रोऽनुष्टुभः । स्विदिति वितर्के एकः असहायः कः चरति गच्छति । उ पादपूरणः कः स्वित् विनष्टः सन् पुनर्जायते उत्पद्यते । किं स्वित् हिमस्य शीतस्य भेषजमौषधम् । किं स्वित् महत् आवपनम् आ समन्तादुप्यते यस्मिंस्तद्वपनस्थानम्॥९॥

सूर्य्यं एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ १० ॥

होता प्रत्याह । सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।

अग्निश्च हिमस्य शीतस्य भेषजम् भूमिः अयं लोकः आवपनं-महत् ॥ १० ॥

का० ( २०, ५, २१ ) सूर्य्य इत्याचष्टे । होता ब्रह्माणं प्रति वक्ति॥ सूर्य्योऽसहायो गच्छति अनेन होतृब्रह्माणौ यजमाने ब्रह्मवर्चसं धत्तः । असौ वा आदित्य एकाकी चरत्येष ब्रह्मवर्चसं ब्रह्मवर्चसमेवास्मिंस्तद्धत्त इति ( १३, २, ६, १० ) श्रुतेः । चन्द्रमाः क्षीणः पुनर्जायते वर्धते अनेनायुर्धत्तः । चन्द्रमा वै जायते पुनरायुरेवास्मिंस्तद्धत्त इति ( १३, २, ६, ११ ) श्रुतेः । हिमस्य भेषजमग्निः अनेन तेजो धत्तः । अग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्त इति ( १२ ) श्रुतेः । भूमिरयं लोको महदावपनम् अनेनास्मिन् प्रतिष्ठां धत्तः । अयं वै लोक आवपनं महदस्मिन्नेव लोके प्रतितिष्ठतीति ( १३ ) श्रुतेः ॥ १० ॥

का स्विदासीत् पूर्वचित्तिः किᳬं स्विदासीद् बृहद्वयः । का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥ ११ ॥

होता ब्रह्माणं पृच्छति । कास्वित् । का पुनः आसीत् पूर्वचित्तिः । किम्पुनरासीत् बृहत् वयः पक्षी । का पुनरासीत् पिलिप्पिला का पुनरासीत् पिशङ्गिला ॥ ११ ॥

का० ( २०, ५, २२ ) होता ब्रह्माणं का स्विदासीदिति । होता ब्रह्माणं पृच्छति ॥ पूर्वं चिन्त्यत इति पूर्वचित्तिः सर्वेषां प्रथमस्मृतिविषया का स्वित् बृहत् महत् वयः पक्षी किं स्वित् आसीत् । पिलिप्पिला का स्वित् पिशङ्गिला च का स्विदासीत् ॥ ११ ॥

द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद्वयः । अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ १२ ॥

ब्रह्मा प्रश्नान् व्याकरोति । द्यौरासीत् । द्युग्रहणेनात्र बृ-

ष्टिर्लक्ष्यते । सा हि पूर्वं सर्वैः प्राणिभिश्चिन्त्यते अश्व आसीद्-बृहद्वयः । अश्वशब्देनाश्वमेधो लक्ष्यते । वयसा इव ह्यनेनाश्वमेधेन स्वर्गं लोकमारोहन्ति अविरासीत् अविः पृथिव्यभिधीयते सा आसीत् पिलिप्पिला वृष्ट्या हि क्रियमाना पृथिवी पिलिप्पिला भवति । श्रीरिति श्रुत्या पृथिव्युक्ता च । रात्रिरासीत्पिशङ्गिला । पिशमिति रूपनाम रात्रिर्हि सर्वाणि रूपाणि गिलति अदृश्यानि करोति ॥ १२ ॥

का० ( २०, ५, २३ ) द्यौरिति प्रत्याह । ब्रह्मा होतारं प्रति वक्ति ॥ पूर्वचित्तिः पूर्वस्मरणविषया द्यौर्वृष्टिरासीत् द्योशब्देन वृष्टिर्लक्ष्यते सर्वप्राणिनामिष्टत्वात् । तथा च श्रुतिः ( १३, २, ६, १४ ) द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टिमवरुन्द्धे इति ॥ अश्वः बृहद्वयः आसीत् अश्वशब्देनाश्वमेधो लक्ष्यते अश्वमेधेन वयमेव स्वर्गमारोहतीत्यश्वमेधो वयः । अवतीत्यविः पृथिवी पिलिप्पिलासीत् वृष्ट्या भूः पिलिप्पिला चिक्कणा भवति । श्रीर्वै पिलिप्पिलेति ( १३, २, ६, १६ ) श्रुत्या श्रयन्त पनामिति श्रीशब्देन भूरेव । रात्रिः पिशङ्गिला आसीत् पिशमिति रूपनाम पिशं रूपं गिलतीति पिशङ्गिला रात्रौ सर्वाणि रूपाण्यन्तर्भवन्ति ॥ १२ ॥

वायुष्ट्वा पचतैरवतु । असितग्रीवश्छागैः । न्यग्रोधश्चमसैः । शल्मलिर्वृद्ध्या । एष स्य राथ्यो वृषा । पड्भिश्चतुर्भिरेदगन् । ब्रह्माकृष्णश्च नोऽवतु । नमोऽग्नये ॥ १३ ॥

प्रोक्षत्यश्वम् । वायुष्ट्वा वायुः त्वा पचतैः पाकैः अवतु । वाय्वग्निसंयोगाद्धि द्रव्याणि पच्यन्ते । असितग्रीवः छागैः असितग्रीवोऽग्निः धूमसँयोगात् । छागैः अवतु कृष्णग्रीवादिभिः पशुभिः । अश्वाङ्गेष्वालभ्यमाना अश्वायोपकुर्वन्ति अदृष्टेनोपका-

रेण । न्यग्रोधश्चमसैः अवतु सोमसंबन्धेन । शल्मलिः स्वकीयया वृद्ध्या त्वा अवतु पालयतु । एष स्यः एष सः राथ्यः रथे साधुः राथ्यः । वृषा सेक्ता । पद्भिश्चतुर्भिः । आ इत् आगन् आगतः चतुर्ग्रहणाङ्किम् । तस्मादश्वास्त्रिभिस्तिष्ठति अथ युक्तः सर्वैः सममायुत इति श्रुतिः । ब्रह्मा कृष्णश्च । ब्रह्मा परिबृढः अकृष्णः न विद्यते कृष्णमस्येत्यकृष्णश्चन्द्रमाः । स च नोऽस्माकम् अश्वम् अवतु । नमः अग्नये अग्निं नमस्करोत्याविघ्नाय ॥ १३ ॥

का० (२०, ६, ७) अश्वप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति । अद्भ्यस्त्वौषधीभ्य इति प्राकृतमन्त्रेण ( ६, ९ ) वायुष्ट्वेत्यारभ्य देवः सविता दधात्वित्यन्तेन ( १६ ) कण्डिकाचतुष्टयेनाश्वमेधिकेन चाश्वप्रोक्षणं करोतीति सूत्रार्थः ॥ चत्वारि यजूंष्यश्वदेवत्यानि । हे अश्व ! वायुः पचतैः पाकैः त्वा त्वामवतु वायुसंयोगादग्निः शीघ्रं पचति । असिता ग्रीवा यस्य धूमेनेत्यसितग्रीवोऽग्निः छागैः त्वामवतु । अग्निर्वा असितग्रीव इति ( १३, २, ७, २ ) श्रुतेः । कृष्णग्रीव आग्नेयो रराटे इति ( २४, १ ) वक्ष्यमाणत्वादश्वाङ्गेषु कृष्णग्रीवादयः पञ्चदश पर्यङ्ग्याः पशवः सन्ति तैरग्निरवत्वित्यर्थः । न्यग्रोधः चमसैः सोमपात्रैः त्वामवतु । शाल्मलिः वृक्षविशेषो वृद्ध्या त्वामवतु शाल्मलिर्वनस्पतीनां वर्षिष्ठः वर्धत इति ( १३, २, ७, ४ ) श्रुतेः ॥ किञ्च स्यः स एष वृषा सेक्ताश्वः राथ्यः रथे साधुः पड्भिः पादैः चतुर्भिरेव आ अगन् आगतः आ इदगन्निति पदच्छेदः अश्वस्त्रिभिः पादैस्तिष्ठति चतुर्भिश्च गच्छतीति चतुर्ग्रहणम् । तथा च श्रुतिः (१३,२,७,५) तस्मादश्वस्त्रिभिस्तिष्ठत्यथ युक्तः सर्वैः पड्भिः सममायुत इति । पदशब्दस्य डान्तत्वं छान्दसम् । किञ्च अकृष्णः नास्ति कृष्णं लाञ्छनं यस्मिन् स ब्रह्मा चन्द्रो नोऽस्मानवतु । चन्द्रमा वै ब्रह्माकृष्णश्चन्द्रमस एनं परिददातीति ( १३, २, ७, ७ ) श्रुतेः । नोऽस्माकमश्वमवत्विति वा। अग्नये नमः नमस्कारोऽस्तु विघ्नाभावायाग्नेर्नातिः क्रियते ॥ १३ ॥

सᳪँशितो रश्मिना रथः सᳪँशितो रश्मिना ह-

र्यः । सᳪंशितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगवः ॥१४॥

सᳪंशितो रश्मिना । तिस्रो ऽनुष्टुब्विराट्त्रिष्टुभः । प्रोक्षणे एव अश्वदेवत्याः । सम्पूर्वः श्यतिः शोभने वर्तते । संदर्शितः यथा दर्शनीयतमः रश्मिना रथो भवति । यथा च संसितः रश्मिना हयोऽश्वः । एवमयं संशितः । अप्सु अद्भिः । अप्सुजाः अप्सुजातोऽश्वः । अप्सुजाताः अश्व इति श्रुतिः । किम्भूतः ब्रह्मा—विभर्ता । परिवृढो वा । सोमपुरोगवः । सोमसंस्कारान्पुरस्कृत्य स्वर्गं लोकं गच्छतीति सोमपुरोगम ः । सोमार्था हि पशवः । स पशुमालभते रसमेवास्मिन्दधातीति श्रुतिः ॥ १४ ॥

अश्वदेत्यानुष्टुप् । सम्पूर्वः श्यतिः शोभनार्थः रथः रश्मिना कृत्वा संशितः दर्शनीयो भवति तस्माद्रथः पर्युतो दर्शनीयतमो भवतीति ( १३, २,७, ८ ) श्रुतेः । हयोऽश्वो रश्मिना संशितः शोभितः । अप्सु जायते अप्सु जा अश्वः अप्सु अद्भिः संशितः विभक्तिव्यत्यः । अप्सु योनिर्वा अश्व इति ( २३, २, ७, ९ ) श्रुतेः । कीदृशः ब्रह्मा परिवृढः सोमपुरोगमः सोमः पुरोगमोऽग्रगामी यस्य सः सोमं पुरस्कृत्य स्वर्गं लोकं गच्छति । सोमपुरोगममेवैनᳪं स्वर्गं लोकं गमयतीति ( १० ) श्रुतेः ॥ १४ ॥

स्वयं वाजिँस्तन्वं कल्पयस्व स्वयं यजस्व स्वयं जुषस्व । महिमा तेऽन्येन न सं नशे ॥ १५ ॥

किञ्च । स्वयं वाजिन् । स्वयमेव हे वाजिन् तन्वं शरीरं कल्पयस्व । स्वराज्यं तवास्तीत्यर्थः । अत एव स्वयमेव यजस्व । न तेऽन्यो यष्टास्तीति भावः । स्वयञ्च जुषस्व । स्वयमेवाभिरुचितं स्थानं कुरुष्व । किमर्थमिदमुच्यतेऽस्माभिरिति चेत् । महिमा ते तव संबन्धी अन्येन महिम्ना न संनशे । नश्वर-

दर्शनार्थः। वेदे तु व्याप्त्यर्थोऽपि भवति। न संव्याप्यते ॥१५॥

आश्वो विराट्। हे वाजिन्! स्वयं तन्वं शरीरं त्वं कल्पयस्व स्वयं रूपं कुरुष्व यादृशमिच्छसीति ( १३, २, ७, ११ ) श्रुतेः। स्वाराज्यं तवास्तीति भावः अतः स्वयं यजस्व न तवान्यो यष्टास्ति स्वयं जुषस्व इष्टस्थानं सेवस्व। यतस्ते तव महिमा अन्येन महिम्ना न संनशे न संनश्यते न व्याप्यते नाशिरदर्शनार्थोऽत्र तु व्याप्त्यर्थः यलोपे नशे रूपम् ॥ १५ ॥

न वा उं एतन्म्रियसे न रिष्यसि देवाँ२॥ इदेषि पथिभिः सुगेभिः। यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ १६ ॥

न वै। वै उ पादपूरणौ। न एतत् म्रियसे यत् संज्ञप्यसे। नच रिष्यसि विनश्यसि ॥ विशस्यमानः। किमिति। यत् देवान् इत्प्रति एषि गच्छसि। पथिभिः सुगेभिः साधुगमनैर्देवयानैरित्यर्थः। किञ्च। यत्र आसते सुकृतः साधुकारिणः। यत्र च ते ययुः गताः तत्र त्वान्देवः सविता दधातु ॥ १६ ॥

आश्वी त्रिष्टुप्। हे अश्व! अस्माभिर्यत्त्वं संज्ञप्यसे एतत्त्वं न म्रियसे मरणं नाप्नोषि न च रिष्यसे न विनश्यसि विशस्यमानः। वै उ निपातौ पादपूरणौ। यत्सुगेभिः सुगैः सुदुरोरधिकरण इति ( पा० ३, १, ४८ वा० ३, ) गमेर्डप्रत्ययः साधुगमनैः पथिभिः देवयानमार्गैः देवानित् देवान् प्रति एषि गच्छसि। किञ्च सुकृतः साधुकारिणो नरा यत्र लोके आसते तिष्ठन्ति यत्र च ते सुकृतो ययुर्गताः तत्र लोके सविता देवः त्वा त्वां दधातु स्थापयतु सवितैवैनꣳ स्वर्गे लोके दधातीति ( १३, २, ७, १२ ) श्रुतेः ॥ १६ ॥

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयन्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः। वायुः पशुरासीत्तेनायजन्त स एतं लोक-

मजयद्यस्मिन्वायुः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः । सूर्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्त्सूर्यः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥ १७ ॥

उपगृह्णात्यपः । अग्निः पशुः । सृष्टियज्ञे देवानामासीत् । तेनाग्निना ते अयजन्त । स चाग्निस्तत्र साधनभावमुपगतः सन् एतं पृथिवीलोकम् अजयत् । यस्मिन् लोके अग्निः । अतः स ते लोको भविष्यति तञ्च जेष्यसि । पिब एताः प्रोक्षणीः अपः । वायुः : सूर्यः पशुः व्याख्यातमन्यत् ॥ १७ ॥

का० ( २०, ६, ८ ) उपगृह्णात्यपां पेरुरग्निः पशुरिति । अपां पेरुरिति ( ६, १० ) प्राकृतेन मन्त्रेणाग्निः पशुरिति वैकृतेन च प्रोक्षणीरश्वास्ये उपगृह्णातीति सूत्रार्थः ॥ अश्वदेवत्यानि त्रीणि यजूंषि। सृष्टिदेवानामग्निः पशुरासीत् तेनाग्निरूपेण पशुना देवा अयजन्त ईजिरे स पशुभावमुपगतोऽग्निः एतं लोकं पृथ्वालोकमजयत् यस्मिन् लोकेऽग्निः हे अश्व ! स लोकः ते तव भविष्यति तं लोकं त्वं जेष्यसि एताः प्रोक्षणीरपः पिब । तथा च श्रुतिः ( १३, २, ७, १३ ) यावानग्नेर्विजयो यावांल्लोको यावदैश्वर्य्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्य्यं भविष्यतीत्येवैनं तदाहेति । वायुः पशुरासीत् सूर्य्यः वदैश्वर्य्यं भविष्यतीत्येवैनं तदाहेति । वायुः पशुरासीत् सूर्य्यः पशुरासीत् वायुलोकोऽन्तरिक्षं सूर्य्यलोकः स्वर्गः तावपि ते । भविष्यत इत्यर्थः ॥ १७ ॥

प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥१८॥

परिपशव्ये हुत्वा प्राणाय स्वाहेति । तिस्रोऽपराः वाच-

यति पत्नीर्नयन्। अम्बे। अनुष्टुप्। अश्वस्तुतिः। पत्न्यः परस्परमामन्त्रयन्ते। हे अम्बे हे अम्बिके हे अम्बाले। न मां नयति अश्वं प्रति प्रापयति कश्चन कश्चिदपि। मदगमनेन च। ससस्ति। सस् स्वप्ने। अन्यां परिगृह्य शेते। कुत्सितोऽश्वः। अश्वकः। अकुत्सितोऽपीर्ष्यया कुत्स्यते। सुभद्रिकाम्। कुत्सिता सुभद्रा सुभद्रिका। इयमपीर्ष्यया कुत्स्यते। काम्पीलवासिनीम् काम्पीलनगरे हि सुभगा सुरूपा विदग्धा विनीताश्च स्त्रियो भवन्ति॥ १८॥

का० (२०, ६, ११) परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः। परिपशव्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति (६, ११) द्वे आहुती हुत्वा प्राणायेत्याद्यास्तिस्र आहुतीर्जुहोति एकामश्वसंज्ञपनादौ चतस्रोऽन्ते इति सूत्रार्थः। त्रीणि यजूंषि। प्राणाय अपानाय व्यानाय आभिराहुतिभिरश्वं प्राणवन्तं करोति। तथा च श्रुतिः (१३, २, ८, २) प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टं भवतीति। का० (२०, ६, १२) वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति। सर्वाः पत्नीः पशुशोधनाय पान्नेजनीहस्ताः पशून् प्रति नयन्नमस्ते आतानेति (६, १२) प्राकृतं मन्त्रमम्बे इत्याद्यमधिकं च वाचयतीति सूत्रार्थः। अश्वदेवत्यानुष्टुप्। पत्न्यः परस्परं वदन्ति हे अम्बे! हे अम्बिके! हे अम्बालिके! नामान्येतानि कश्चन नरो मां न नयति अश्वं प्रति न प्रापयति तर्हि किमर्थं गम्यते तत्राह अश्वकः कुत्सितोऽश्वोऽश्वकः अकुत्सितोऽपीर्ष्यया कुत्स्यते सुभद्रिकां कुत्सिता सुभद्रा सुभद्रिका ईर्ष्यया कुत्स्यते तां नारीमादाय ससस्ति शेते सस् स्वप्ने ह्लादिः मदगमनेऽश्वोऽन्यामादाय शयिष्यत इति मया गम्यते न तु मां कश्चिन्नयतीति भावः। किम्भूतां सुभद्रिकां काम्पीलवासिनीं काम्पीले नगरे वसतीति काम्पीलवासिनी ताम् तत्र हि विदग्धाः सुरूपाः कामिन्यो भवन्ति आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बे अम्बालेऽम्बिके पूर्वे इति (पा० ६, १, ११८) प्रकृतिभावः॥ १८॥

गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ १९ ॥

पत्न्यः त्रिःपरियन्त्यश्वम् । गणानां त्वा । स्त्रीगणानाम् । मध्ये त्वां युगपत् गणपतिं हवामहे आह्वयामः । एवमेव प्रियाणां मनुष्याणां मध्ये त्वामेव प्रियपतिं प्रियं भर्तारं हवामहे । एवमेव निधीनां सुखनिधीनां मध्ये त्वामेव निधिपतिं हवामहे । कथं कृत्वा । हे वसो । अश्व मम त्वं पतिर्भूयाः इति । महिषी अश्वमुपसंविशति । आहमजानि । आकृष्य अहम् अजानि अज गतिक्षेपणयोः । क्षिपामि । गर्भधम् । गर्भस्य धारयितृ रेतः । आत्वमजासि गर्भधम् । आकृष्य च त्वं हे अश्व अजासि क्षिपसि गर्भधं रेतः ॥ १९ ॥

का० ( २० ६, १३ ) अश्वं त्रिस्त्रिः परियान्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति । सर्वाः पत्न्यः पान्नेजनहस्ता एव प्राणशोधनात्प्राक् अश्वं त्रिस्त्रिः परियन्ति मध्ये पितृवत् अप्रदक्षिणं परियन्ति त्रिः त्रिभिर्मन्त्रैः वसो ममेति त्रिष्वप्यनुषङ्गः ततश्चैवम् प्रथमं गणानामिति त्रिः प्रदक्षिणं परियान्ति तत्र सकृन्मन्त्रेण द्विस्तूष्णीम् ततः प्रियाणामित्यप्रदक्षिणं त्रिः निधीनामिति प्रदक्षिणं त्रिः एवं नवकृत्व इति सूत्रार्थः । त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि । हे अश्व ! वयं त्वां हवामहे आह्वयामः कीदृशं त्वाम् गणपतिं गणानां मध्ये गणपतिं गणरूपेण पालकम् प्रियाणां वल्लभानां मध्ये प्रियपतिं प्रियस्य पालकम् निधीनां सुखनिधीनां मध्ये निधिपतिं सुखनिधेः पालकं त्वां हवामहे । हे वसुरूप अश्व ! मम पतिस्त्वं भूया इति शेषः । का० ( २०, ६, १४ ) प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति । प्रक्षालितेषु शोधितेषु पशूनां प्राणेषु पत्नीभिरध्वर्युणा

यजमानेन प्राणशोधने कृते महिषी अश्वसमीपे शेते । अध्वर्युवक्यम् । हे अश्व ! गर्भधं गर्भे दधाति गर्भधं गर्भधारकं रेतः अहम् आ अजानि आकृष्य क्षिपामि अज गतिक्षेपणयोः लोट् तं च गर्भधं रेतः आ अजासि आकृष्य क्षिपसि ॥ १९ ॥

ता उभौ चतुरः पदः सम्प्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु ॥ २० ॥

ता उभौ । यौ आवां कृतसङ्केतौ तौ उभौ त्वं चाहञ्च । चतुरः पदः पादान् । द्वौ तव सम्बन्धिनौ द्वौ च मम सम्बन्धिनौ । संप्रसारयाव । एवं हि सम्बन्धे संवेशप्रकार इत्यभिप्रायः । अधीवासेन प्रच्छादयति । स्वर्गे लोके (एष वै स्वर्गो लोको यत्र पशुꣳसञ्ज्ञपयन्ति)। प्रोर्णुवाथाम् । ऊर्णोतिराच्छादने । प्रोर्णुयनङ्कुरुतमित्यध्वर्युराह । अश्वशिश्नमुपस्थे कुरुते । वृषा वाजी वृषा सेक्ता वाजी अश्वः रेतोधा रेतसः धारयिता रेतो दधातु आसिञ्चतु ॥ २० ॥

पूर्वमन्त्रशेषः । तौ त्वमहं च उभौ चतुरः पदः पादानावां सम्प्रसारयाव तव द्वौ मम द्वौ एवं संवेशनप्रकारः । का० ( २०, ६, १४ ) अधीवासेन प्रच्छादयति स्वर्गे लोक इति । अधीवासेनाश्वमहिष्यौ छादयति अध उपरिष्टाच्चाच्छादनक्षमं वासोऽधीवासः। अध्वर्युवक्यम् । अध्वर्युर्वदति । हे अश्वमहिष्यौ ! युवां स्वर्गे लोकेऽस्यां यज्ञभूमौ प्रोर्णुवाथां वास आच्छादयतम् ऊर्णुञ् आच्छादने एष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्तीति ( १३, २, ८, ५ ) श्रुतेः । का० ( २०, ६, १६ ) अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति । महिषी स्वयमेवाश्वशिश्नमाकृष्य स्वयोनौ स्थापयति ॥ अश्ववक्यम् । वाजी अश्वो रेतो दधातु मयि वीर्य्यं स्थापयतु कीदृशोऽश्वः वृषा सेक्ता रेतोधाः रेतो दधातीति रेतोधाः वीर्यस्य धारयिता॥२०॥

उत्सक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन् । य स्त्रीणां जीवभोजनः ॥ २१ ॥

उत्सक्थ्या । गामश्वाऽश्वं यजमानोऽभिमन्त्रयते । उद्गते सक्थिनी यस्याः सा उत्सक्थी तस्या उत्सक्थ्याः । महिष्याः । अवगुदन्धेहि । अवाचीनगुदम् रेतो धेहि सिञ्च । कथमिति चेत् । समञ्जिञ्चारया वृषन् । सञ्चारय अञ्जिम् अनक्ति व्यनक्ति पुंस्त्वमित्यञ्जिः पुंस्त्वजननमुक्तम् । हे वृषन् सेक्तः । कथंभूतोऽञ्जिः । यः स्त्रीणाञ्जीवभोजनः । यस्मिन्सति स्त्रियो जीवन्तीत्युच्यन्ते । यस्मिंश्च सति । भोजनादीन् भोगान् लभन्ते । स जीवभोजनः ॥ २१ ॥

का० ( २०, ६, १७ ) उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते॥ अश्वदेवत्या गायत्री । हे वृषन् सेक्तः अश्व ! महिष्या गुदमव गुदोपरि रेतो धेहि वीर्य्यं धारय कीदृश्याः उत्सक्थ्याः उत् ऊर्ध्वे सक्थिनी ऊरू यस्याः सा उत्सक्थी तस्याः । कथम् तदाह अञ्जि लिङ्गं सञ्चारय अनक्ति व्यनक्ति पुंस्त्वामित्याञ्जिर्लिङ्गम लिङ्गं योनौ प्रवेशय योऽञ्जिः स्त्रीणां जीवभोजनः जीवयति जीवः भोजयति भोजनः जीवश्चासौ भोजनश्च जीवभोजनः यस्मिन् लिङ्गे योनौ प्रविष्टे स्त्रियो जीवन्ति भोगांश्च लभन्ते तं प्रवेशय ॥ २१ ॥

यकासकौ शकुन्तिकाहलगिति वञ्चति । आहन्ति गभे पसो निगल्गलीति धारका ॥ २२ ॥

इत उत्तरं दशानुष्टुभोऽभिमेथिन्यः पुंस्त्वजननमुक्तम् । द्वितीयोपरिष्टाद् बृहती अत्र च यो यत्र भण्यते स तत्र देवतात्वमुपगच्छति । अध्वर्युः कुमारीमभिमेथयति । यकासकौ । अकच्प्रत्ययोऽत्र कुत्सायाम् । अकुत्सा प्रदर्शनमाह । यका असकौ । शकुन्तिका । अल्पे कन्प्रत्ययः । अल्पीयसी पक्षिणीव । आहलक् इति । मकारवचनम् । हलेहले इति ब्रुवन्ती । वञ्चति त्वरितं गच्छति । चपलेत्यर्थः । तस्या अपि । आहन्ति । ह-

न्तिर्गत्यर्थः । आगच्छति । अन्तर्भावितण्यर्थो वा । आगमयति प्रवेशयति । अत्यर्थं वाहन्ति । गभे पसः । गभ इति आर्षो वर्णविपर्ययः । पसः पसतेः स्पृशतिकर्मणः । भगे शिश्नमाहन्तीत्यर्थः । अथ तदा निगल्गलीति अत्यर्थं शुक्रं मुञ्चति धारका योनिः । यद्वा शब्दानुकरणम् निगल्गलीति गिरते वा । निगिरति शिश्नं योनिः ॥ २२ ॥

का० ( २०, ६ १८ ) अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्याᳬ हये-हयेऽसावित्यामन्त्र्यामन्त्र्य । अध्वर्य्वादयः पञ्च हये-हयेऽसाविति सम्बुद्ध्यन्तनामोच्चारणपूर्वकं संमुखीकृत्य यकासकाविति दशर्चसम्बन्धिनीभ्यां द्वाभ्यामृग्भ्यां कुमारीपत्नीभिः सह सोपहासं संवदन्ते तत्र प्रथममध्वर्युः कुमारीं पृच्छति कुमारि हये हये कुमारि यकासकौ शाकुन्तिकेतीत्यर्थः ॥ कुमार्यादिदेवत्या दश तन्मध्ये द्वितीयोपरिष्टाद् बृहती अन्या नवानुष्टुभः ॥ अव्ययसर्वनाम्नामकच् प्राक् टेरिति अकच् कुत्सायाम् । अल्पा शकुन्तिः शकुन्तिका अल्प इति ( पा० ५, ३, ८५ ) कन् । अङ्गुल्या योनिं प्रदर्शयन्नाह । यका या असकौ असौ शकुन्तिका अल्पपक्षिणीव आहलक् शब्दानुकरणं हले हले इति शब्दयन्ती वञ्चति गच्छति । स्त्रीणां शीघ्रगमने योनौ हलहलाशब्दो भवतीत्यर्थः । गभे वर्णविपर्यय आर्षः भगे योनौ शकुनिसदृश्यां यदा पसो लिङ्गमाहन्ति आगच्छति स इति पसतेः स्पृशतिकर्मण इति ( निरु० ५, १६ ) यास्कः पुंस्प्रजननस्य नाम हन्तिर्गत्यर्थः यदा भगे शिश्नमागच्छति तदा धारका धरति लिङ्गमिति धारका योनिर्निगल्गलीति नितरां गलति वीर्यं क्षरति यद्वानुकरणम् गल्गलेति शब्दं करोति ॥ २२ ॥

यकोऽसकौ शकुन्तक आहलगिति वञ्चति । विवक्षत इव ते मुखमध्वर्यो मा नस्त्वमभिभाषथाः॥ २३ ॥

अध्वर्युं प्रत्याह कुमारी । यकोऽसकौ । यकः असकौ यः

असौ शकुन्तक इव आहलगिति वञ्चति । तस्य श्लीलं भाषिणः किमन्यत् ब्रवीमि । विवक्षत इव ते मुखम् । असाधुवक्तुमिच्छत इव ते मुखं पश्यामि । अतो हे अध्वर्यो मा नः अस्मान् त्वमभि भाषथाः ॥ २३ ॥

कुमारी अध्वर्युं प्रत्याह । अङ्गुल्या शिश्नं प्रदर्शयन्त्याह । हे अध्वर्यो ! यकः यः असकौ असौ शकुन्तकः पक्षीव विवक्षतः वक्तुमिच्छतस्ते तव मुखमिव आहलगिति वञ्चति इतस्ततश्चलति अग्रभागे सच्छिद्रं लिङ्गं तव मुखमिव भासते । अतो नोऽस्मान् प्रति मा अभिभाषथाः मा वद तुल्यत्वात् ॥ २३ ॥

माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः। प्रतिलामीति ते पिता गभे मुष्टिमतंꣳसयत ॥ २४ ॥

ब्रह्मा महिषीमभि मेथति । माता च ते । हे महिषि यदा माता च तव पिता च तव । अग्रं वृक्षस्य । वार्क्ष्यस्येति तद्धितलोपः । वार्क्ष्यस्य पर्यङ्कस्य उपरितनम्भागम् रोहतः । मैथुनार्थमेकं पर्यङ्कमारोहत इति अश्लीलाभिप्रायं वचनम् । तदा प्रतिलामीति तिल स्नेहने । स्नेहाम्यहमनेन कर्मणा । इति एवमिति प्रकारवचनं वदन् । तव पिता गभे भगे मुष्टिं मुष्ट्याकारं शिश्नम् अतंसयत् अक्षिपत् । एवन्तवोत्पत्तिः ॥ २४ ॥

ब्रह्मा महिषीमाह । महिषि हये हये महिषि ते तव माता च पुनस्ते तव पिता यदा वृक्षस्य वृक्षजस्य काष्ठमयस्य मञ्चकस्याग्रमुपरिभागं रोहतः आरोहतः तदा ते पिता गभे भगे मुष्टिं मुष्टितुल्यं लिङ्गमतंसयत् तंसयति प्रक्षिपति एवं तवोत्पत्तिरित्यश्लीलम् तसि अलङ्कृतौ चुरादिः लिङ्गमुत्थानेनालङ्करोति वा । किं कुर्वन् प्रतिलामीति वदन्निति शेषः तिल स्नेहने तव भोगेन स्निह्यामीति वदन् । एवं तवोत्पत्तिः ॥ २४ ॥

माता च ते पिता च तेऽग्रं वृक्षस्य क्रीडतः। विवक्षत इव ते मुखं ब्रह्मन्मा त्वं वदो बहु ॥ २५ ॥

महिषी प्रत्याह। माता च ते। हे ब्रह्मन्। यदा माता च ते अग्रे वृक्षस्य पर्यङ्कस्य क्रीडतः। तदा त्वमुत्पन्नः। तुल्योत्पत्तिरावयोः। यश्चोभयोर्दोषो न तमेकश्चोदयितुमर्हति। एवं सति। यदसाधु वदितुमिक्षत इव ते मुखं पश्यामि तत् हे ब्रह्मन् मा त्वं वदो बहु ॥ २५ ॥

सानुचरी महिषी ब्रह्माणं प्रत्याह। हे ब्रह्मन्! ते तव माता ते पिता च यदि वृक्षस्य वृक्षविकारस्य मञ्चकस्याग्रे क्रीडतः रमेते तद तवोत्पत्तिरिति तवापि तुल्यम्। यत्रोभयोः समो दोषः परिहारोऽपि वा समः नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे इति न्यायात्त्वयेदं न वक्तव्यमिति भावः। एवं सत्यपि विवक्षतः वक्तुमिच्छोरिव ते तव मुखं लक्ष्यत इति शेषः। हे ब्रह्मन्। त्वं मा बहु वदः मा ब्रूहि॥२५॥

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारꣳ हरन्निव। अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव ॥ २६ ॥

उद्गाता वा वातामभिमेथयति ऊर्ध्वामेनाम्। कश्चित्पुरुषमाह। ऊर्ध्वामेनां वा वाताम् उच्छ्रितां कुरु। कथमिव। गिरौ भारं मध्ये निगृह्य हरेत् एवमेनां मध्ये निगृह्य। ऊर्ध्वामुच्छ्रापय। अथ यथेत्येतस्य स्थाने तथा च उच्छ्रापय यथा अस्यावातायः मध्यं योनिप्रदेशः एधताम्। एध वृद्धौ वृद्धिं यायात्। अथैनां गृह्णीयाः। शीते वाते पुनन्निव। पावा खला व। पावा हि धान्यवाते शुद्धं कुर्वन्। ग्रहणमोक्षौ झटिति करोति ॥ २६ ॥

उद्गाता वावातामाह। कश्चिन्नरं प्रत्याह। हे नर? एनां वावातामूर्ध्वामुच्छ्रापय उच्छ्रितां कुरु। कथमिव गिरौ भारं हरन्निव यथा कश्चित् गिरौ पर्वते भारं हरन् पर्वतोपरि भारमारोपयन् य-

था तमुच्छ्रयति। तथैनामूर्ध्वां कुरु। कथमूर्ध्वा कार्य्या तत्राह अथेति निपातो यथार्थः यथा अस्यै अस्या वावातायाः मध्यमेधतां योनिप्रदेशो वृद्धिं यायात् यथा योनिर्विशाला भवति तथा मध्ये गृहीत्वोच्छ्रापयेत्यर्थः। दृष्टान्तान्तरमाह शीते वाते पुनन्निव यथा शीतले वायौ वाति पुनन्धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्ध्वं करोति तथेत्यर्थः॥ २६॥

ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव। अथास्य मध्यमेजतु शीते वाते पुनन्निव॥ २७॥

वावाता प्रत्याहोद्गातारम्। भवतोऽप्येतदेवम्। ऊर्ध्वमेनम्। उद्गातारमुच्छ्रयतात् ऊच्छ्रापय। अत्र स्त्री पुरुषायते। गिरौ भारं हरन्निव। अथैवं क्रियमाणस्यास्य मध्यं प्रजननम् एजतु चलतु। अथैनन्निगृह्णीष्व शीतेव ते पुनन्निव। यवान्॥२७॥

वावातोद्गातारं प्रत्याह। भवतोऽप्येतत्समानम्। हे नर! एनमुद्गातारमूर्ध्वमुच्छ्रयतात् ऊर्ध्वं कुरु गिरौ भारमिति पूर्ववत्। अथ यथास्य उद्गातुर्मध्यं लिङ्गमेजतु कम्पताम् एजृ कम्पने लोट्। शीते वाते उक्तम्॥ २७॥

यदस्या अꣳहुभेद्याः कृधु स्थूलमुपातसत्। मुष्काविदस्या एजतो गोशफे शकुलाविव॥ २८॥

होता परिवृक्तामभिमेथयति। यदस्याः। यत् यदा अस्याः परिवृक्तायाः। अंहुभेद्याः। अल्पयोनेः। अंहुः हन्तव्यः भेद्यप्रदेशः प्रजननमस्या इति अंहुभेदी तस्याः अंहुभेद्याः। कृधु इति ह्रस्वनाम। ह्रस्वं शिश्नम्। स्थूलश्च उपातसत् उपसङ्गच्छेत्। अथ तदा अल्पत्वात् योनेः स्थूलत्वाच्च ह्रस्वत्वाच्च दुष्प्रजननस्य। मुष्कौ वृषणौ इत् एवम् अस्याः प्रजननस्योपरि एजतः। एजृ कम्पने। कम्पनङ्कुरुतः। कथमिव गोशफे गोष्प-

दे उदकपूर्णे । शकुलाविव मत्स्याविव ॥ २८ ॥

होता परिवृक्तामाह । यत् यदा अस्याः परिवृक्तायाः कृधु ह्रस्वं स्थूलश्च शिश्नमुपातसत् उपगच्छेत् योनिं प्रति गच्छेत् तंस उप क्षये तदा मुष्कौ वृषणौ इत् एव अस्याः योनेरुपरि एजतः कम्पेते । लिङ्गस्य स्थूलत्वात् योनेरल्पत्वात् वृषणा बहिस्तिष्ठत इत्यर्थः । तत्र दृष्टान्तः गोशफे जलपूर्णे गोः खुरे शकुलौ मत्स्याविव यथा उदकपूर्णे गोः पदे मत्स्यौ कम्पेते । कृध्विति ह्रस्वनाम ( निघ० ३, २, ६ ) । कीदृश्या अस्याः अंहुभेद्याः अंहु भगं भेद्यं विदार्य्यं यस्याः सा अंहुभेदी तस्याः अंहुर्भिद्यते यस्या वा ॥ २८ ॥

यद्देवासो ललामगुं प्रविष्टीमिनमाविषुः । सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥ २९ ॥

परिवृक्ता मत्याह । यद्देवासः । होतृप्रमुखान् सर्वानेव ऋत्विजः परिवदति । यदा एते देवासः शिश्नदेवाः शिश्नक्रीडिनः । ललामगुम् ललामेति सुखमभिधीयते सुखङ्कर्तुङ्गच्छतीति ललामगुः शिश्नम् । यद्वा ललामेति पौण्ड्रमभिधीयते । शिश्नं हि योनिम्प्रविशत् पौण्ड्रम्भवति । प्रविष्टीमिनम् प्रवेश्य विष्टम्भ्य च । आविषुः आलिङ्गनचुम्बनादिभिर्निगृह्णीयुर्नारीम् । अथ तदा । सक्थ्ना देदिश्यते नारी सक्थिकृतेन कुटिलगमनेन अतिदिश्यते लक्ष्यते नारी । नहि तस्याः किञ्चिदव्याप्तं पुरुषेण भवति अन्यत्र सक्थ्न इत्यभिप्रायः । कथमिवासत्यस्याक्षिभुवो यथा । द्विःप्रकारं सत्यम् अक्षिप्रभवमनक्षिप्रभवश्चेति । अक्षिग्राह्यमक्षिप्रभवं तत्र हि सर्वं व्याप्तं भवति । अनक्षिप्रभवं श्रोत्रग्राह्यम् तत्तु साकाङ्क्षम् वक्तुराप्ततामपेक्षते । अतो विशिनष्टि आक्षिभुव इति । सत्यस्य अक्षिभुवः यथा अवितथत्वं तथेति ॥ २९ ॥

परिवृक्ता होतारमाह । यत् यदा देवासः देवाः दीव्यन्ति क्रीडन्ति देवा होत्रादय ऋत्विजो ललामगुं लिङ्गं प्र आविषुः योनौ प्रवेशयन्ति । अव रक्षे गतौ कान्तौ तृप्तौ प्रीतौ द्युतौ श्रुतौ । प्राप्तौ श्लेषेऽर्पणे वेशे भागे वृद्धौ गृहे बधे । इत्युक्तेरत्रावधातुः प्रवेशनार्थः लुङ् छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लुङ् व्यवहिताश्चेति (पा० १, ४, ८२) प्रोपसर्गेण व्यवधानम् । ललामेति सुखनाम ललामं सुखं गच्छति प्राप्नोति ललामगुः शिश्नः । यद्वा ललामं पुण्ड्रं गच्छति ललामगुः लिङ्गं योनिं प्रविशदुत्थितं पुण्ड्राकारं भवतीत्यर्थः । कीदृशं ललामगुं विष्टीमिनं ष्टीम क्लेदे विशेषेण स्तीमनं क्लेदनं विष्टीमः घञ्प्रत्ययः विष्टीमः क्लेदोऽस्यास्ति विष्टीमी तम् अत इनिठनाविति अस्त्यर्थे इनिप्रत्ययः शिश्नस्य योनिप्रवेशे क्लेदनं भवतीत्यर्थः । यदा देवाः शिश्नक्रीडिनो भवन्तो ललामगुं योनौ प्रवेशयन्ति तदा नारी सक्थ्ना ऊरुणा ऊरुभ्यां देदिश्यते निर्दिश्यते अत्यन्तं लक्ष्यते दिश्यतेर्यङ्प्रत्ययः भोगसमये सर्वस्य नार्य्यङ्गस्य नरेण व्याप्तत्वादूरुमात्रं लक्ष्यते इयं नारीतीत्यर्थः । तत्र दृष्टान्तः सत्यस्याक्षिभुवो यथेति सत्यं द्विविधम् अक्षिभ्यां भवतीत्यक्षिभु प्रत्यक्षम् एकं च श्रोत्रग्राह्यम् षष्ठ्यौ तृतीयार्थे । यथा कश्चिदक्षिभुवा प्रत्यक्षेण सत्येन निर्दिश्यते तत्र विश्वासो भवति तथा ऊरुणा दृष्टेन नारीति लक्ष्यते इत्यर्थः । श्रोत्रग्राह्ये तु सत्ये वक्तुराप्ततमत्वमपेक्षितम् ॥ २९ ॥

यद्धरि॒णो यव॒मत्ति॒ न पु॒ष्टं प॒शु मन्य॑ते । शू॒द्रा य॒दर्य॑जारा॒ न पोषा॑य धनायति ॥ ३० ॥

क्षत्ता पालागलीमभिमेथयति । यद्धरिणः । यदा हरिणो मृगः यवं सस्यम् अतिभक्षयति । अथ तदा क्षेत्री । न पुष्टम्पशु । पशुमिति प्राप्ते विभक्तिलोपः । पुष्टम्पशुम् मन्यते अवगच्छति । मम क्षेत्रम् भक्षितमिति यथा । एवम् शूद्रा यत् यस्य शूद्रस्य भर्तुः । अर्यजारा अर्यः वैश्यः जारो यस्याः सा अर्यजारा भवेत् तदा स शूद्रः क्षेत्री । न पोषाय ममेतदिति मन्यते।

नच तस्यान्धनायति । धनामिव च तां न मन्यते परस्योपभो-
ग्यत्वात् ॥ ३० ॥

क्षत्ता पालागलीमाह । यत् यदा हरिणो यवमत्ति मृगो यदा क्षेत्रस्थं धान्यं भक्षयति तदा क्षेत्री पशु पशुं हरिणं पुष्टं न मन्यते मम धान्यभक्षणेन पशुः पुष्टो जातः सम्यगिति न जानाति किन्तु-मदीयं क्षेत्रं भक्षितमिति दुःखी भवतीत्यर्थः । पशुशब्दात् सुपां सुलुगित्यमो लुक् । एवं शूद्रा शूद्रजातिः स्त्री यदा अर्य्यजारा भवति अर्य्यः स्वामिवैश्ययोरिति निपातनादर्य्यो वैश्यो जार उपपतिर्यस्याः सा अर्य्यजारा । शूद्राच्चामहत्पूर्वाज्जातिरिति ( पा० ४, १, ४, वा० १, २ ) शूद्राज्जात्यर्थे टाप् । वैश्यो यदा शूद्रां गच्छति तदा शूद्रः पोषाय न धनायते पुष्टिं न इच्छति मद्भार्य्या वैश्येन भुक्ता सती पुष्टा जातेति न मन्यते किन्तु व्यभिचारिणी जातेति दुःखितो-भवतीत्यर्थः अशनायोदन्येति क्यचि धनायतीति इच्छार्थे निपातः॥३०॥

यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते । शूद्रो य-
दर्यायै जारो न पोषमनुमन्यते ॥ ३१ ॥

पालागली प्रत्याह । यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते क्षेत्रीति । यदुक्तं भवतोऽप्येतदेवमिति सोल्लुण्ठमाह । कियांस्तु विशेषः । शूद्रः यत् अर्यायै अर्यायाः वैश्यायाः जारः जारयिता । तदा क्षेत्री वैश्यः आत्मनः पोषं नानुमन्यते । नहि सा तस्य पोष्या निकृष्टश्च शूद्रः उत्कृष्टा वैश्या इति । समाप्तमश्लीलभाषणम् ॥ ३१ ॥

पालागली क्षत्तारमाह । यदा हरिणो यवमत्ति तदा बहु यथा तथा पशुं पुष्टं न मन्यते इदं भवतोऽपि तुल्यम् इयान् विशेषः यत् यदा शूद्रः अर्य्यायै अर्य्याया वैश्याया जारो भवति तदा वैश्यः पोषं पुष्टिं नानुमन्यते मम स्त्री पुष्टा जातेति नानुमन्यते किन्तु शूद्रेण नीचेन भुक्तेति क्लिश्यतीत्यर्थः । अश्लीलभाषणं समाप्तम् ॥ ३१ ॥

दधिक्राव्णो॑ अकारिषं जिष्णोरश्व॑स्य वाजिनः॑ ।
सुरभि नो मुखा॑ कर॒त् प्रण आयू॑ᳪषि तारिषत् ॥३२॥

ऋत्विजो यजमानश्च सुरभिमतीमृचमन्तत आहुः वाचमेवं पुनन्ति । दधिक्राव्णः । अनुष्टुबश्वदेवत्या । यत् दधिक्राव्णः अश्वस्य संस्कारार्थमश्लीलभाषणम् अकारिषम् अकार्षम् अकार्ष्म कृतवन्तः वचनव्यत्ययः । एकवचनस्य स्थाने बहुवचनं बोध्यम् । उपरिष्टाद्बहूनि पदानि बहुवचनान्तानि दृश्यन्ते । किम्भूतस्य दधिक्राव्णः । जिष्णुः जेतुः अश्वस्य अशनस्य व्यापिनः वाजिनः । ओविजी भयचलनयोः वेजनवतः तत्र सुरभीणि सुगन्धीनि । अश्लीलभाषणेन हि दुर्गन्धीनि मुखानि भवन्ति पापहेतुत्वात् । नः अस्माकं मुखानि । निकारलोपश्छान्दसः करत् करोतु यज्ञ इत्यध्याहारः । किञ्च । प्र णः आयूंषि तारिषत् । प्रतारिषत् प्रवर्द्धयतु च नः अस्माकम् । बहुवचनं बाल्यौवनवृद्धवयोऽपेक्षम् ॥ ३२ ॥

का० ( २०, ६, २१ ) महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः । महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य पुरुषा अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारो मन्त्रं पठेयुरिति सूत्रार्थः ॥ वामदेवात्मजदधिक्रावदृष्टाश्वदेवत्यानुष्टुप् । वयमध्वर्य्वादयः अकारिषमकार्ष्म कृतवन्तः वचनव्यत्ययः अश्लीलभाषणमिति शेषः किमर्थम् अश्वस्य संस्कारायेति शेषः अश्वसंस्कारायाश्लीलभाषणं कृतवन्त इत्यर्थः । कीदृशस्याश्वस्य दधिक्राव्णः दधाति धारयति नरमिति दधिः आदृगमहनेति किप्रत्ययः दधिः सन् क्रामतीति दधिक्रावा तस्य अन्येभ्योऽपि दृश्यत इति वनिप्प्रत्ययः विड्वनोरनुनासिकस्यादिति । धातोराकारः । जिष्णोः जयनशीलस्य । वाजिनः वजति गच्छति वाजी वाजोऽस्यास्तीति वा वाजी । तस्य च नोऽस्माकं मुखा मुखानि सुरभि सुरभीणि करत् करोतु यज्ञ-

इति शेषः अश्लीलभाषणेन दुर्गन्धं प्राप्तानि मुखानि सुरभीणि यज्ञः करोत्वित्यर्थः । तथा च श्रुतिः ( १३, २, ९९ ) सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनत इति । सुरभिशब्दाद्विभक्तिलोपः । किञ्च नोऽस्माकमायूंषि जीवनानि बाल्ययौवनवार्द्धकानि प्रतारिषत् प्रतारयतु प्रवर्द्धयतु लेटि रूपम् ॥ ३२ ॥

**गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥ ३३ ॥**

पत्न्योऽसि पथङ्कल्पयन्ति । गायत्री त्रिष्टुप् षड्भिर्ऋग्भिः । तत्राद्या उष्णिक् चतस्रोऽनुष्टुभः परा त्रिष्टुप् । गायत्री च त्रिष्टुप् च जगती च अनुष्टुप् च । अनुष्टुप् च पङ्क्त्या सह बृहती च । उष्णिहा सह ककुप् च । सूचीभिः शम्यन्तु त्वाम् हे अश्व मदागमनमार्गभेदेन वर्त्मनिदर्शनं सूचीभिः क्रियते तेन यथा असिः प्रवर्तते ॥ ३३ ॥

का० ( २०, ७, १ ) तिस्रः पत्न्योऽसिपथान् कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्री त्रिष्टुबिति द्वाभ्याम् । गायत्री त्रिष्टुबिति षडृचे द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्याद्यास्तिस्रः पत्न्यः ताम्ररूप्यस्वर्णमयीभिः प्रत्येकमेकाधिकशतसंख्याभिः सूचीभिरश्वाङ्गेऽसेः शासस्य मार्गान् कुर्वन्ति शासस्य सुखप्रवेशाय सूचीभिर्वितुद्य वितुद्याश्वत्वचं जर्जरीकुर्वन्तीति सूत्रार्थः ॥ अश्वदेवत्याः षडृचः आद्योष्णिक् । हे अश्व ! गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह बृहती उष्णिहा सह ककुप् एतानि छन्दांसि सूचीभिरेताभिः त्वां शम्यन्तु संस्कुर्वन्तु विकरणव्यत्ययः असिपथार्थं त्वग्भेदनं संस्कारः ॥ ३३ ॥

**द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः । विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥ ३४ ॥**

द्विपदा याः । याः द्विपदाः याश्च चतुष्पदाः याश्च त्रिपदाः

याश्च षट्पदाः । याश्च विच्छन्दाः विगतं छन्दो याभ्यस्ताः । विषमाक्षराः विषमपदाः छन्दोलक्षणेनानभिसम्बद्धाः । याश्च सच्छन्दाः अन्यूनातिरिक्ताक्षराश्छन्दसां जातयः ताः सर्वाः सूचीभिः शम्यन्तु त्वाम् ॥ ३४ ॥

चतस्रोऽनुष्टुभः । द्वे पदे यासां ता द्विपदाः याः चतुष्पदा या त्रिपदाः याः षट्पदाः याः विच्छन्दाः विगतं छन्दो याभ्यस्ताः छन्दोलक्षणहीनाः याः सच्छन्दाः छन्दोलक्षणयुताः ताः सर्वाः छन्दोजातयः हे अश्व ! सूचीभिः त्वां शम्यन्तु ॥ ३४ ॥

महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः । मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥ ३५ ॥

महानाम्न्यो रेवत्यः । महानाम्न्य ऋचः शाक्वर्य इति या भण्यन्ते । रेवत्य एता अपि रेवत्यः । रैवतं साम भवति । विश्वाः सर्वाः आशा दिशः । प्रभूवरीः प्रभूततमाः । मैघीः मेघे भवाः विद्युतः तदुत्पन्नायाश्च वाचः ताः सर्वाः सूचीभिः शम्यन्तु । शमनेन हविः कुर्वन्तु त्वाम् ॥ ३५ ॥

महत् नाम यासां ता महानाम्न्यः शाक्वर्य ऋचः । रेवत्यः ऋचः यस्यामृचि रैवतं साम गीयते सा रेवती । विश्वाः सर्वाः आशा दिशः । कीदृश्य आशाः प्रभूवरीः प्रभवन्ति सर्वभूतानि धारयितुं समर्था भवन्ति प्रभूवर्यः अन्येभ्योऽपि दृश्यन्त इति ( पा० ३, २, ७५ ) वनिप् ऋन्नेभ्य इति ङीप् वनो र चेति तस्य रेफः पूर्वसवर्णदीर्घत्वम् । मेघे भवा मैघ्यः पूर्वसवर्णः मेघोत्था विद्युतः वाचो वेदलक्षणा अन्या अपि । एताः सर्वाः सूचीभिः हे अश्व ! त्वां शम्यन्तु हविः कुर्वन्तु ॥ ३५ ॥

नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया । देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥ ३६ ॥

नार्यस्ते । नृणामपत्यानि बहूनि स्त्रीलक्षणानि नार्यः । ते

तव। पत्न्यः यजमानस्य पत्न्यः। लोम लोमानि विचिन्वन्तु पृथक्कुर्वन्तु। मनीषया मनस इच्छया मनसः पर्यालोचनेन। देवानाञ्च याः पत्न्यः दिशः ताः सर्वाः सूचीभिः शम्यन्तु शम-नेन हविष्कुर्वन्तु त्वाम् ॥ ३६ ॥

हे अश्व ! नार्य्यः नृणामपत्यानि स्त्रियः ते तव लोम रोमाणि मनीषया मनस इच्छया विचार्य्य विचिन्वन्तु पृथक् कुर्वन्तु रोमे-त्यत्र जातावेकवचनं विभक्तिलोपो वा। कीदृश्यो नार्य्यः पत्न्यः प-त्युर्नो यज्ञसंयोग इति नकारः यजमानभार्य्या महिष्याद्या इत्यर्थः। किञ्च देवानामिन्द्रादीनां पत्न्यः दिशः प्राच्याद्याः सूचीभिः त्वां शम्यन्तु ॥ ३६ ॥

रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः।
अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः॥३७॥

रजता हरिणीः। रजतसुवर्णसीसमय्यः सूच्यः। युजः सह-योजनाः। युज्यन्ते कर्मभिः सीमालक्षणैः। याः ताः अश्वस्य वाजिनः वेजनवतः त्वचि रोमसु। सीमाः सिमाशब्दः सीमप-र्यायो मर्यादावचनः सीमानकुर्वाणाः शम्यन्तु हविः कुर्वन्तु श-म्यन्तीः हविष्कुर्वाणाः अश्वम् ॥ ३७ ॥

रजताः रजतमय्यः हरिणीः हरिण्यः सुवर्णमय्यः सीसाः सीसं ताम्रं तन्मय्यः। त्रय्यः सूच्यो भवन्ति। लोहमय्यो रजता हरिण्या दिशो वै लोहमय्योऽवान्तरदिशो रजता ऊर्ध्वा हरिण्यस्ताभिरेवै-नं कल्पयन्तीति ( १३, २, १०, ६ ) श्रुतेः। सूचीनां दिग्रूपत्वादश्व-संस्कारक्षमत्वम् ताः सूचयः कर्मभिः अश्वदेहे सीमाकरलक्षणैः यु-ज्यन्ते योगं प्राप्नुवन्ति सीमाकरणयोग्या भवन्तीत्यर्थः। कीदृश्य-स्ताः युजः युज्यन्ते ता युजः संयुता एकीभूता इत्यर्थः। ताः सूच्यो वाजिनो वेगवतोऽश्वस्य त्वचि सिमाः सीमा रेखाः शम्यन्तु शम्य-क् कुर्वन्तु सिमाशब्दः सीमापर्य्यायः। कीदृश्यस्ताः शम्यन्तीः श-म्यन्त्यः संस्कारं कुर्वाणाः ॥ ३७ ॥

**कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूर्य । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति ॥ ३८ ॥**

कुविदङ्गेति व्याख्यातम् ॥ ३८ ॥

इयं व्याख्याता ( १०, ३२ ) ॥ ३८ ॥

**कस्त्वाच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । क उ ते शमिता कविः ॥ ३९ ॥**

अश्वं विशास्ति अनुवाकेन षड्चेन । तत्राद्या गायत्री परा अनुष्टुभः । कस्त्वा । कः प्रजापतिः त्वाम् आच्छ्यति । छो छेदने । आछिनति । त्वचः । कश्च प्रजापतिः त्वां विशास्ति त्वचा वियोजयति । कश्च प्रजातिः ते तव गात्राणि शरीराणि शम्यति शमनेन हविर्भावमापादयति । क उ ते प्रजापतिरेव ते शमिता कविः मेधावी क्रान्तदर्शनः । यद्वा प्रश्नरूपोऽयं मन्त्रः । कोऽयं मनुष्यः त्वाम् आच्छ्यति कश्च त्वां विशास्ति कश्च ते शमिता कविः । न कश्चिदपीत्यभिप्रायः । उः पादपूरणः ॥३९॥

का० ( २०, ७, ६ ) अश्वं विशास्त्यनुवाकेन कस्त्वाच्छ्यतीति । षड्चेनानुवाकेनाश्वं विशास्ति अश्वोदरं पाटयति मेदस उद्धरणाय वपाया अभावात् उदरमध्यस्थं स्त्यानं घृताभं घनं श्वेतं मांसं मेद इति सूत्रार्थः ॥ अश्वदेवत्याः षड्चः आद्या गायत्री । हे अश्व ! कः प्रजापतिः त्वा त्वामाच्छ्यति छिनत्ति छो छेदने लट् ओतः श्यनीति ओकारलोपः । हे अश्व ! कः त्वां विशास्ति त्वचा वियोजयति । ते तव गात्राणि कः शम्यति शमनेन हविः करोति । कः उ कश्च प्रजापतिरेव कविर्मेधावी ते तव शमिता शमयिता प्रजापतिरेव सर्वं करोति नाहमित्यर्थः ॥ ३९ ॥

ऋतवस्त ऋतुथा पर्व शमितारो विशासतु । संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ॥ ४० ॥

यस्मिन् पक्षे कस्त्वा प्रजापतिस्त्वेति व्याख्यातं तस्मिन्पक्षे प्रतार्यते । ऋतवस्ते । ऋतवश्च तव शमितारः ऋतुथा ऋतावृतौ कालेकाले । पर्व । पर्वाणि पर्वाणि । संवत्सरस्य च तेजसा । शमीभिः कर्मभिः शम्यन्तु शमनेन हविर्भावमापादयन्तु त्वां हे अश्व ॥ यदा तु कः त्वां विशासितुं समर्थो मनुष्य एवं व्याख्यातम् तदा ऋतवो देवाः ते शमितारः इत्येवं व्याख्येयम् ॥ ४० ॥

पञ्चानुष्टुभः । हे अश्व ! ऋतवः शमितारः ऋतुथा ऋतौ ऋतौ काले काले ते तव पर्व पर्वाणि अस्थिग्रन्थीन् शमीभिः कर्मभिः विशासतु भिन्नानि कुर्वन्तु । केन संवत्सरस्य संवत्सरात्मकस्य कालस्य तेजसा । किञ्च ऋतवः त्वा त्वां शम्यन्तु पर्वविशासनेन हविः कुर्वन्तु ॥ ४० ॥

अर्धमासाः परूंषि ते मासा आच्छ्यन्तु शम्यन्तः । अहोरात्राणि मरुतो विलिष्टꣳ सूदयन्तु ते ॥ ४१ ॥

अर्धमासाः । अर्द्धमासाः मासाश्च ते तव परूंषि पर्वाणि आछ्यन्तु आछिन्दन्तु शम्यन्तः शमनेन हविर्भावमापादयन्तः । किञ्च । अहोरात्राणि मरुतश्च विलिष्टन्दुःश्लिष्टं सूदयन्तु षूद क्षरणे पठ्यते । इह सन्धाने वर्तते वाक्ययोगात् सन्दधन्तु ते तव ॥ ४१ ॥

अर्धमासाः पक्षाः मासाश्च तदभिमानिनो देवाः शम्यन्तः संस्कुर्वन्तः सन्तो हे अश्व ! ते तव परूंषि पर्वाणि आच्छ्यन्तु समन्ताच्छिन्दन्तु ग्रन्थिर्ना पर्वपरुषीति कोशः । किञ्च अहोरात्राणि अहोरात्राभिमानिदेवा मरुतश्च देवाः ते तव विलिष्टं लिश अल्पीभावे

विशेषेणालपमङ्गम् तत् सूदयन्तु सन्दधतु सूद निरासे अत्र सन्धानार्थः व्यर्थं मास्तु ॥ ४१ ॥

दैव्या॑ अध्वर्य्यव॒स्त्वाच्छ्य॑न्तु॒ वि च॑ शासतु । गात्रा॑णि पर्व॒शस्ते॑ सिमा॑: कृण्वन्तु॒ शम्य॑न्तीः ॥ ४२ ॥

दैव्या अध्वर्यवः । ये च दैव्या दिव्या अध्वर्यवः अश्विप्रभृतयः ते च त्वा त्वाम् । आछयन्तु वि च शासतु चकारो भिन्नक्रमः। विशासतु च । किञ्च गात्राणि पर्वशः ते तव सिमाः मर्यादाः कृण्वन्तु कुर्वन्तु शम्यन्तीः । मर्यादा दर्शतेन शमनं कुर्वाणाः ॥ ४२ ॥

देवानामिमे दैव्याः अश्विनौ देवानामध्वर्य्यू इत्युक्तत्वात् अश्विप्रभृतयो देवसम्बन्धिनोऽध्वर्य्यवः हे अश्व ! त्वा त्वामाच्छ्यन्तु आच्छिन्दन्तु विशासतु च चकारो भिन्नक्रमः हविः कुर्वन्तु किञ्च तेतव गात्राणि विभक्तिव्यत्ययः गात्रेषु शरीरेषु पर्वशः पर्वाणि पर्वणि सिमाः सीमा मर्य्यादाः कृण्वन्तु कुर्वन्तु कृ करणे स्वादिः कीदृशीः सीमाः शम्यन्तीः संस्कुर्वाणाः ॥ ४२ ॥

द्यौस्ते॑ पृथि॒व्यन्तरि॑क्षं वा॒युश्छि॒द्रं पृ॑णातु॒ ते । सूर्य्य॑स्ते॒ नक्ष॑त्रैः स॒ह लो॒कं कृ॑णोतु साधु॒या ॥ ४३ ॥

द्यौस्ते द्यौश्च ते तव पृथिवी च अन्तरिक्षञ्च वायुश्च छिद्रं पृणातु पूरयतु ते । किञ्च । सूर्यश्च ते तव नक्षत्रैः सह लोकं स्थानं कृणोतु साधुया साधुम् । द्वितीयार्थे या छान्दसः ॥४३॥

द्यौः स्वर्गः पृथिवी अन्तरिक्षं लोकत्रयाभिमानिनो देवाः अग्निवायुसूर्य्याः वायुरन्योऽपि शरीरस्थः प्राणादिः हे अश्व । ते तव छिद्रं पृणातु वचनव्यत्ययः पृणन्तु पूरयन्तु यत् न्यूनं तत् पूरयन्तु । किञ्च नक्षत्रैः सह नक्षत्रयुक्तः सूर्य्यः ते तव साधुया साधुं समीचीनं लोकं कृणोतु करोतु सुपां सुलुगित्यादिना साधुशब्दात्परस्यामो यादेशः सूर्य्यस्ते उत्तमं लोकं ददात्वित्यर्थः ॥ ४३ ॥

शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ॥ ४४ ॥

शं ते । सुखं ते तव अस्तु हे अश्व परेभ्यः गात्रेभ्यः । शं सुखम् अवरेभ्यः । अस्तु । शम् अस्थभ्यः अस्थिभ्यः मज्जभ्यश्च अस्तु । शञ्चास्तु तन्वै शरीराय । षष्ठ्यर्थे छन्दसि चतुर्थी वक्तव्येति षष्ठ्यर्थे चतुर्थी तन्वाः तव ॥ ४४ ॥

हे अश्व ! ते तव परेभ्योऽवयवेभ्य उच्चेभ्यः शिरआदिभ्यः शं सुखमस्तु । अवरेभ्यः अधःस्थेभ्यश्च पादादिभ्यो गात्रेभ्यः शमस्तु । अस्थभ्यः तवास्थिभ्यश्च शमस्तु अस्थिदधीति अस्यानुवृत्तौ छन्दस्यपि दृश्यत इति सूत्रेण हलादावप्यस्थिशब्दस्यानङादेशः । मज्जभ्यः पृष्ठधातुभ्योऽपि शमस्तु किम्बहुना तव तन्वै तन्वाः सर्वस्यापि शरीरस्य शमु सुखमेवास्तु । षष्ठी चतुर्थ्यर्थे आशिषि वा चतुर्थी । उ एवार्थे ॥ ४४ ॥

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥ ४५ ॥

इत उत्तरं ब्रह्मोद्यमष्टादशर्चम् उत्तरप्रत्युत्तरैः परस्परं सम्वादः ब्रह्मोद्यम् । तत्राद्या चतस्रोऽनुष्टुभः का स्विदासीत्पूर्वचित्तिरित्याद्याश्च चतस्रोऽनुष्टुभः त्रिष्टुभोऽन्याः । होताध्वर्युम्पृच्छति कः स्विदेकाकी ॥ ४५ ॥

का० ( २०, ७, १० ) प्राग्वपाहोमाद्धोताध्वर्य्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् । वपाहोमात्प्राक् च चतुर्ऋग्भिः पूर्ववदुक्तिप्रत्युक्त्या सदोमध्ये गत्वा होता अध्वर्य्युश्च संवादं कुरुतः ॥ अष्टादश ऋचो ब्रह्मोद्यसंज्ञाः ब्रह्मोद्यं परस्परं संवादः आद्याश्चतस्रोऽनुष्टुभः का स्विदित्याद्याश्च ( ५३ ) अनुष्टुभः । होताध्वर्य्युं पृच्छति । व्याख्याता ( ९ ) ॥ ४५ ॥

सूर्य्यं एकाकी चरति चन्द्रमा जायते पुनः । अ-
ग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ ४६ ॥

तम्प्रत्याह । सूर्य एकाकी चरति अग्रे व्याख्यातौ ॥ ४६॥
व्याख्याता ( १० ) ४६ ॥

किꣳ स्वित् सूर्य्यसमं ज्योतिः किꣳ समुद्रसमꣳ
सरः । किꣳ स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न
विद्यते ॥ ४७ ॥

अध्वर्युर्होतारम्पृच्छति । किꣳस्वित्सूर्यसमं ज्योतिः । कि
श्च समुद्रसमं सरः । किंस्वित्पृथिव्यै पृथिव्याः वर्षीयः महत्तरं
कस्य च मात्रा परिमाणम् न विद्यते नास्ति ॥ ४७ ॥

अध्वर्य्युर्होतारं पृच्छति । हे होतः ! स्विदिति तर्के सूर्य्यसमं
सूर्य्यमण्डलतुल्यं ज्योतिः तेजः किं तत् ब्रूहि । समुद्रसमं सरः किं
स्वित् । पृथिव्यै पृथिव्याः सकाशात् वर्षीयः महत्तरं किं स्वित् प्रि-
यास्थिरेत्यादिना वृद्धस्य वर्षादेशः । कस्य मात्रा परिमाणं न
विद्यते ॥ ४७ ॥

ब्रह्म सूर्य्यसमं ज्योतिर्द्यौः समुद्रसमꣳ सरः ।
इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥ ४८॥

तं प्रत्याह । ब्रह्म सूर्यसमम् । ब्रह्म त्रयीलक्षणं परं वा । सू-
र्यसमं ज्योतिः । द्यौः समुद्रसमं सरः । इन्द्रः पृथिव्यै वर्षीयान्
महत्तरः । गोस्तु मात्रा न विद्यते गवा हि यज्ञो धार्यते स जग-
तः कारणम् भवतीत्येतदभिप्रायम् । पृथिवी वा गौः ॥ ४८ ॥

होता प्रत्याह सूर्य्यसमं ज्योतिर्ब्रह्म त्रयीलक्षणम् परं च । समु-
द्रसमं सरो द्यौरन्तरिक्षं यतो वृष्टिर्भवति । पृथिव्यै पृथिव्याः सका-
शात् इन्द्रः वर्षीयान् वृद्धतरः । तु पुनः गोः धेनोः मात्रा न विद्य-
ते यज्ञधारकत्वात् ॥ ४८ ॥

